गत्वा शुभफलदानशक्तिराहित्ये तद्दोषाणां प्राबल्यमिति । अथ-कथमनिष्टस्थानास्थितैरपि स्थानबलसंपन्नैरपि ग्रहैः स्वदोषा बाध्यन्ते । उच्यते—स्थानादिवीर्यवन्तोऽनिष्टस्थानस्था अपि शुभफलदानशक्तिमन्त इति प्राबल्यात् तेषां दोषबाधकत्वं युक्तम् । इत्थं गुणदोषाणां बलाबलमुक्त्वा शुभक्रियाकालमाह—

**दोषान् विनिघ्नन्ति गुणा बलाढ्याः**
**समानतायां बलिनो हि दोषाः ।**
**इति द्वयानां च विमृश्य वीर्यं**
**शुभं बलीयस्सु गुणेषु कुर्यात् ॥ ४८ ॥**

तात्कालिकादिबलसंपन्ना गुणा दोषान् विनाशयन्ति । अर्थादेव बलाढ्या दोषा गुणान् बाधन्त इति सिद्धं । तथा च गुरुः—

यत्र वा यस्य दौर्बल्यं गुणे विहितयोस्तयोः ।
गुणदोषाख्ययोस्तस्य नास्तितेत्याह पद्मभूः ॥

इति । अपवादगुणास्तु बलवद्दोषैरपि न बाध्यन्ते । तथाच सर्वसिन्धौ—

तयोरन्यं बली हन्ति तुल्यौ चेन्निष्फलावुभौ ।
बलवानपि दोषौघः स्वापवादैर्विनश्यति ॥

इति । समानतायां—बलसाम्ये दोषा गुणेभ्यो बलिनो हि भवन्ति । अतस्तदा दोषाणामेव प्राबल्यं । तथा हि गुणदोषाणामन्योन्यविघातेन स्वफलनाशे कर्मफलमप्यसत् स्यात् । ततश्च नहि कश्चित्फलापेक्षया कर्म करोतीति दोषप्राबल्यं सिद्धमेव—तथा श्रीपतिना "समानतायामपि रिष्टमेव" इति । रिष्टातिरिष्टसाम्ये रिष्ट-

मेव बलवदित्युक्तं । तथेहापीति । उक्तवद्द्वयानां गुणदोषाणां बलं विमृश्य सम्यग्विचार्य गुणेषु दोषेभ्यो बलवत्तरेषु शुभं कुर्यात् । तथा च गुरुः—

एवं बलं समालोच्य द्वयानामप्यतन्द्रितः ।
बलैर्दोषाद्गुणे तुङ्गे निर्दोषे शुभकालता ॥

इति । प्रकृतमध्यायमुपसंहरति —

**इति षोडशभिस्त्रिसङ्गुणैः**
**ग्रथितश्श्लोकवरैर्विगुम्भितः ।**
**कृतसर्वबलाबलस्थिति-**
**र्वसितोऽध्याय इहैष पञ्चमः ॥ ४९ ॥**

**इति विद्यामाधवीये बलाबलाध्यायः पञ्चमः.**

---

त्रिसंगुणैः षोडशभिरष्टचत्वारिंशाद्भिः पद्यैर्ग्रथितः विहितः सप्ताङ्गगुणदोषबलाबलस्थितिरेष पञ्चमोऽध्यायः वसितः अवसितः समाप्त इत्यर्थः । वासित इत्यत्र "वष्टिवागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपः ॥

इत्थं विद्यामाधवीये मुहूर्तादर्शे विद्यामाधवस्यात्मजेन ।
अध्यायोऽभूद्गुम्फितो विष्णुनाम्ना वीर्यावीर्यं दर्शयन्
पञ्चमोऽयम् ॥

**इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां**
**बलाबलाध्यायः पञ्चमः**

## सव्याख्याने विद्यामाधवीये गृहीता निबन्धारः

## सव्याख्याने विद्यामाधवीये स्मृता निबन्धाः.